# लघुकौमुदी व्याकरणम् ।



श्रीवरदराजेन विरचितम् ।



श्रीयुत भुवनचन्द्रवसाकेन प्रकाशितम् ।



द्वितीय बार मुद्रितम् ।

सम्वत् १९४[illegible]

# HUKOUMUDI BYAKARANAM.

BY

BARADA RÁJA.

# लघुकौमुदी व्याकरणम् ।

श्रीवरदराजेन विरचितम् ।

CALCUTTA:

PRINTED BY P. M. SOOR & Co.

AT THE CROWN PRESS, 14 DUFF STREET.

PUBLISHED BY BHUVANA CHANDRA VASÁKA.

No. 8. NIMTOLLAH GHÁT STREET.

1883

Price 8 Annas.

# सूचीपत्त्रम् ।

रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

॥ इत्यजन्ताः पुंलिङ्गाः ॥

---

## ॥ अजन्तस्त्रीलिङ्गाः ॥

॥ रमा ॥

### औङ आपः । ७ । १ । १८ ।

आपन्तादङ्गात्परस्यौङश्शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे रमाः ॥

### सम्बुद्धौ च । ७ । ३ । १०६ ॥

आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥

### आङि चापः । ७ । ३ । १०५ ॥

आङि ओसि चाप एकारः । रमया । रमाभ्याम् २ । रमाभिः ।

### याडापः । ७ । ३ । ११३ ॥

आपो ङितो याट् । वृद्धिः । रमायै । रमाभ्यः २ ।

औङ्गेतयोरात्वं लोके। युवाम्। आवाम्॥

यूयवयौ जसि। ७। २। ९३॥

अनयोर्मपर्य्यन्तस्य। यूयम्। वयम्॥

त्वमावेकवचने। ७। २। ९७॥

एकस्योक्तावनयोर्मपर्य्यन्तस्य त्वमौ स्तो विभक्तौ॥

द्वितीयायाञ्च। ७। २। ८७॥

अनयोरात्स्यात्। त्वाम्। माम्॥

शसो न। ७। १। २९॥

आभ्यां शसो नः स्यादमो ऽपवादः। आदेः-परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्॥

यो ऽचि। ७। १। ८९॥

अनयोर्यकारादेशः स्यादनादेशे ऽजादौ परतः। त्वया। मया।

युष्मदस्मदोरनादेशे। ७। २। ८६॥

अनयोरात्स्यादनादेशे हलादौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः॥

तुभ्यमह्यौ ङयि। ७। २। ९५॥

अनयोर्मपर्य्यन्तस्य। टिलोपः। तुभ्यम्। मह्यम्॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। ६। ३। ११६॥

क्विबन्तेषु पूर्वपदस्य दीर्घः। उपानत्। उपानहौ। उपानहः। क्विन्नत्वात् कुत्वेन घः उष्णिक्। उष्णिहौ। उष्णिग्भ्याम्। द्यौः। दिवौ दिवः। द्युभ्याम्। गीः गिरौ। गिरः। एवं पूः। चतस्रः। चतसृणाम्। का के काः। सर्ववत्॥

यः सौ। ७। २। ११०॥

इदमो दस्य यः। इयम्। त्यदाद्यत्वम्। पररूपत्वम्। टाप। दश्चेति मः। इमे। इमाः। इमाम्। अनया॥ हलि लोपः। आभ्याम् आभिः अस्यै। अस्याः। अनयोः आसाम् अस्याम्। आसु। स्रक्। स्रजौ। स्रग्भ्याम्। त्यदाद्यत्वम्। टाप। स्या त्ये त्याः। एवं तद् एतद्। वाक्। वाचौ। वाग्भ्याम्। वाक्षु। अपशब्दो नित्यबहुवचनान्तः। अप्तृन्निति दीर्घः। आपः॥

अपो भि। ७। ४। ४८॥

अपस्तकारो भादौ प्रत्यये। अद्भिः। अद्भ्यः। अपाम्। अप्सु। दिक्। दिग्। दिशौ दिग्भ्याम्

इति सूचीपत्रम् ।

आदिर्ञिटुडवः । १ । ३ । ५ ॥

उपदेशे धातोराद्या एते इतः स्युः ।

इदितो नुम् धातोः । ७ । १ । ५८ ॥

नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् । अर्च्च पूजायाम् । ९ । अर्च्चति ।

तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ॥

द्विहलोधातोर्दीर्घो सुतात्परस्य नुट् स्यात् । आनर्च्च । आनर्च्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । अर्चिष्यत् । व्रज गतौ । १० । व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ।

वदव्रजहलन्तस्याचः । ७ । २ । ३ ॥

एषामचो वृद्धिःसिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् । कटे वर्षा वरणयोः । ११ । कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ।

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ७ । २ । ५ ॥

# लघुकौमुदी व्याकरणम् ।

---

## संज्ञाप्रकरणम् ।

अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥

इति माहेश्वराणि सूत्राणि अणादिसंज्ञार्थानि ॥

एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः । लण् मध्ये त्वित्संज्ञकः ॥

हलन्त्यम् । १ । ३ । ३ ॥

उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टम्पदं सूत्रान्तरादनुवर्त्तनीयं सर्व्वत्र ॥

कृञ् चानुप्रयुज्यते लिटि । ३ । १ । ४० ॥

आमन्त । लिट्पराः कृभ्वस्तयोऽनु प्रयुज्यन्ते। तेषामिद्धत्वादि ।

उरत् । ७ । ४ । ६६ ॥

अभ्यास ऋवर्णस्यात् । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते ।

द्विर्वचनेऽचि । १ । १ । ५९ ॥

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वेकर्त्तव्ये । गोपायाञ्चक्रतुः ।

एकाच उपदेशेऽनुदात्तात् । ७ । २ । १० ॥

उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्द्धधातुकस्येण्न । ऊदृदन्तैर्यौतिरुक्ष्णु शीङ्स्नुनुक्षु श्विडीङ् श्रिभिः । वृङ्वृञ्भ्याञ्च विनैकाचोऽजन्तेषु निहताः स्मृता । कान्तेषु । शक्लृः । चान्तेषु । पच मुच रिच वच विच सिचः षट् । छान्तेषु । प्रच्छः । जान्तेषु । त्यज निज् रज् भज् भञ्ज् भुज भ्रस्ज मस्ज यज् युज् रुज् रञ्ज विजिर स्वञ्ज सञ्ज सृजः पञ्चदश । दान्तेषु । अद्क्षुद् छिद्तुद् नुद् पद्य भिद् विनद् विन्द शद् सद् स्विद्यस्कन्द हदी षोडश ।

अदर्शनं लोपः । १ । १ । ६० ॥

प्रसक्तस्याऽदर्शनं लोपसंज्ञं स्यात् ॥

तस्य लोपः । १। २ । ९ ॥

तस्येतो लोपः स्यात्। णादयोऽणाद्यर्थाः ॥

आदिरन्त्येन सहेता । १ । १ । ७१ ॥

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्। यथाऽणिति अ इ उ वर्णानां संज्ञा एवमच् हलित्यादयः ॥

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।१।२।२७ ॥

उश्च ऊश्च ऊ३श्च वः। वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥

उच्चैरुदात्तः । १ । २ । २९ ॥

नीचैरनुदात्तः । १ । २ । ३० ॥

समाहारः स्वरितः । १ । २ । ३१ ॥

स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥

मुखनासिकावचनोऽनुनासिकः ।१।२८॥

गोपिता। गोप्ता। गोपायिष्यति। गोपिष्यति। गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्।

नेटि। ७। २। ४॥

इडादौ सिचि हलन्तस्य वृद्धिर्न। अगोपायीत्। अगोपीत्। अगौप्सीत्॥

झलो झलि। ८। २। २६॥

झलः परस्य सस्य लोपो झलि। अगौप्ताम्। अगौप्सुः। अगौप्सीः। अगौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म। अगोपायिष्यत्। अगोपिष्यत्। अगोप्स्यत्। क्षि क्षये। १३। क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। एकाचः इति निषेधे प्राप्ते॥

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि।७।२।१३॥

क्रादिभ्यः एव लिट इडनस्यादन्यस्मादनिटोपि स्यात्॥

अचस्तास्वत्थल्यनिटो नित्यम्। ७। २। ६१॥

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न॥

उपदेशेऽत्वतः। ७। २। ६२॥

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश तस्य दीर्घाभावात् । एचामपि द्वादश तेषां ह्रस्वाभावात् ॥

तुल्यास्यप्रयत्नं सवर्णम् ।१।१।९॥

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद् द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् ॥

ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् ॥

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्द्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥

यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानां । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वा-

इणः परो य इट् ततः परेषां षीध्वं लुङ् लिटां धस्य वा ढः । अविषीध्वम् । अविषीढम् । आविट । आविध्वम् । आविढ्म् । आवियत् । द्युत् दीप्तौ ॥ ४ ॥ द्योतते ॥

द्युतिस्वाप्योः सम्प्रसारणम् ।७।४।६७ ।

अनयोरभ्यासस्य सम्प्रसारणं स्यात् । दिद्युते ।

द्युद्भ्यो लुङि । १ । ३ । ९१ ॥

द्युतादिभ्यः परस्मैपदं वा । लुङि ॥ पुषादीत्यङ् । अद्युतत् । अद्योतिष्ट । अद्योतिष्यत् ॥ एवं श्वितावर्णे । ५ । ञिमिदा स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ । मोहनयोरित्येके । ञिक्ष्विदा चेत्येके । रुच दीप्तावभिप्रीतौ च । घट परिवर्त्तने ॥ ८ । शुभ दीप्तौ ।१९। क्षुभ सञ्चलने । ११ । णभ तुभ हिंसायाम् ॥ १२ ॥१३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने । १४ ।१५ । १६ । ध्वंसु गतौ । १७ ॥ स्रंभ विश्वासे । १८ । वृतु वर्त्तने । वर्त्तते । ववृते । वर्त्तिता ॥

वृद्भ्यः स्यसनोः । १ । ३ । ९२ ॥

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्ये सनि च ॥

न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ ॥

वृतु वृधु स्यन्दू भ्यस्सकारादेरार्द्धधातुकस्येण् न

ऽवर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायान्तु विवृतमेव। बाह्यस्त्वेकादशधा। विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवारः श्वासा अघोषाश्च। हशः संवारा नादाः घोषाश्च। वर्गाणाम्प्रथमतृतीय पञ्चमा यणश्चाऽल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तस्थाः। शल ऊष्माणः। अचः स्वराः। )(क )(ख इति कखाभ्यां प्रागर्द्धविसर्गसदृशो जिह्वामूलीयः। )(प )(फ इति पफाभ्यां प्रागर्द्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ॥

अणुदित्सवर्णस्य चाप्रत्ययः। ११। ६८॥

अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं ऌकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाऽनुनासिकास्ते द्वयोर्द्वयोः संज्ञा।

एत्यः क्यप् ।

**ह्रस्वस्य पिति कृति तुक् । ६ । १ । ७१ ॥**

इत्यः । स्तुत्यः । शासु अनुशिष्टौ ॥

**शास इदङ्हलोः । ६ । ४ । ३४ ॥**

शास उपधाया इत्स्यादङि हलादौ क्ङिति च ।
शिष्यः । वृत्यः । आदृत्यः । जुष्यः ।

**मृजेर्विभाषा । ३ । १ । ११३ ॥**

मृजेः क्यब् वा । मृज्यः ।

**ऋहलोर्ण्यत् । ३ । १ । १२४ ॥**

ऋवर्णान्ताद्धलन्ताच्च ण्यत् ॥ कार्य्यम् । हार्य्यम् । धार्य्यम् ॥

**चजोः कु घिण्ण्यतोः । ७ । ३ । ५२ ॥**

चजोः कुत्वं स्यात् घिति ण्यति च ॥

**मृजेर्वृद्धिः । ७ । २ । ११४ ॥**

मृजेरिको वृद्धिः सार्वधातुकार्द्धधातुकयोः मार्ग्यः ॥

**भोज्यम् भक्ष्ये । ७ । ३ । ६९ ॥**

भोग्यमन्यत् ॥

॥ इति कृत्यप्रक्रिया ॥

परः सन्निकर्षः संहिता ।१।१।१०९॥

वर्णानामतिशयितस्सन्निधिस्संहिता संज्ञः स्यात् ।

हलोऽनन्तराः संयोगः ।१।१।७॥

अज्भिरव्यवहिता हलस्संयोगसंज्ञाः स्युः ।

सुप्तिङन्तम्पदम् ।१।४।१४॥

सुबन्तन्तिङन्तञ्च पदसंज्ञं स्यात् ॥

इति संज्ञाप्रकरणम् ॥

---

## अच्सन्धिः ॥

इको यणचि । ६ । १ । ७७ ॥

इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥

तस्मिन्निति निर्दिष्टे पूर्वस्य ।१।१।६६॥

सप्तमीनिर्देशेन विधीयमानङ्कार्य्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ॥

स्थानेऽन्तरतमः । १ । १ । ५० ॥

छादेर्घेऽद्व्युपसर्गस्य। ६। ४। ९६॥

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे। दन्तच्छदः। आकरेऽवन्यत्स्विन्निति आकरः।

अवे तॄस्त्रोर्घञ्। ३। ३। १२०॥

अवतारः। अवस्तारो जवनिका।

हलश्च। ३। ३। १२१॥

हलन्ताद् घञ्। घापवादः। रमन्ते योगिनो ऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः।

ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्। ३। ३। १२६॥

एषु दुःखसुखार्थेषूपपदेषु खल्। तयोरेवेति भावे कर्मणि च। कृच्छ्रे। दुष्करः कटो भवता। अकृच्छ्रे। ईषत्करः। सुकरः।

आतो युच्। ३। ३। १२८॥

खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः।

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। ३। ४। १८॥

प्रसङ्गे सति सदृशतम आदेशः स्यात् । सु ध्
य् उपास्य इति जाते ॥

अनचि च । ८ । ४ । ४७ ॥

अचः परस्य यरो द्वे वा स्तो नत्वचि ॥

झलाञ्जश्झशि । ८ । ४ । ५३ ॥

स्पष्टम् । इति धकारस्य दकारः ॥

संयोगान्तस्य लोपः । ८ । २ । २३ ॥

संयोगाण्डं यत्पदन्तदन्तस्य लोपः स्यात् ॥

अलो ऽन्त्यस्य । १ । १ । ५२ ॥

षष्ठीनिर्दिष्टान्त्यस्यादेशः स्यात् । इति प्राप्ते ॥

यणः प्रतिषेधो वाच्यः । सुद्ध्युपास्यः । मद्ध्वरिः ।
धात्त्रंशः । लाकृतिः ॥

एचो ऽयवायावः । ६ । १ । ७८ ॥

एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥

यथासंख्यमनुदेशः समानाम् ।१।३।१०॥

समसम्बन्धी विधिर्यथा संख्यं स्यात् । हरये ।
विष्णवे । नायकः । पावकः ॥ गोपयसोर्यत् ।

वान्तो यि प्रत्यये । ६ । १ । ७९ ॥

इहपूरुषः । सन्निपथः । रम्यपथो देशः ॥

अक्ष्णोऽदर्शनात् । ५ । ४ । ७६ ॥

अचक्षुः पर्य्यायादक्ष्णोऽच् स्यात् । गवामक्षीव गवाक्षः ॥

उपसर्गादध्वनः । ५ । ४ । ८५ ॥

प्रगतोऽध्वानं प्राध्वो रथः ॥

न पूजनात् । ५ । ४ । ६९ ॥

पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ॥

॥ इति समासान्ताः ॥

—::—

॥ तद्धिताः ॥

समर्थानां प्रथमाद्वा ।४।१।८२ ॥

इदमधिक्रियते । प्राग्दिश इति यावत् ।

अश्वपत्यादिभ्यश्च । ४ । १ । ८४ ॥

एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु ॥

तद्धितेष्वचामादेः । ७ । २ । ११७ ॥

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् । नाव्यम् ॥

अध्वपरिमाणे च । गव्यूतिः ॥

अदेङ्गुणः । १ । १ । २ ॥

अत् एङ्च गुणसंज्ञः स्यात् ॥

तपरस्तत्कालस्य । १ । १ । ३० ॥

तः परो यस्मात्सच तात्परश्चोच्चार्य्यमाणः सम-कालस्यैव संज्ञा स्यात् ॥

आद्गुणः । ६ । १ । ८३ ॥

अवर्णादचि परे पूर्व्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥

उपदेशेऽजनुनासिक इत् ।१।३।२॥

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानु-नासिक्याः पाणिनीयाः । लण् सूत्रस्था ऽवर्णेन सहोच्चार्य्यमाणो रेफो रलयोः संज्ञा ॥

उरण् रपरः । १ । १ । ५१ ॥

ऋ इति त्रिंशतः संज्ञेत्युक्तन्तत्स्थाने यो ऽण् स रपरः सन्नेव प्रवर्त्तते । कृष्णर्द्धिः तवल्कारः ।

लोपः शाकल्यस्य ।८ । ३ । १९ ॥

टेर्लोप इष्ठेमेयस्सु। पृथुमृदुभृशकृशदृढपरिवृढा-
नामेव रत्वम् इत्येभावः। प्रथिमा। पार्थवम्।
म्रदिमा। मार्दवम्॥

वर्णदृढादिभ्यः ष्यञ् च। ५। १। १२३॥

चादिमनिच्। शौक्ल्यम्। शुक्लिमा। दार्ढ्यम्।
द्रढिमा।

गुणवचनब्राह्मणादिभ्यः कर्मणि च।
५। १। १२४॥

चाद्भावे। जडस्य भावः कर्म वा जाड्यम्।
मौढ्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्।

सख्युर्यः। ५। १। १२६॥

सख्यम्।

कपिज्ञात्योर्ढक्। ५। १। १२७॥

कापेयम्। ज्ञातेयम्॥

पत्यन्तपुरोहितादिभ्यो यक्। ५। १॥
१२८॥

सैनापत्यम्। पौरोहित्यम्।

॥ इति त्वतलोरधिकारः॥

अवर्णपूर्व्वयोः पदान्तयोर्य्वयोर्वा लोपोऽशि परे॥

पूर्वत्रासिद्धम्। ८। २। १॥

सपादसप्ताध्यायीमति त्रिपाद्यसिद्धा त्रिपाद्या-मपिपूर्व्वम्प्रतिपरं शास्त्रमसिद्धम्। हर इह। हर-यिह। विष्णुइह। विष्णविह॥

वृद्धिरादैच्। १। १। १॥

आदैच्च वृद्धिसंज्ञः स्यात्॥

वृद्धिरेचि। ६। १। ८८॥

आदेचि परे वृद्धिरेकादेशः स्यात्। गुणाऽप-वादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्य्यम्। कृष्णौ-त्कण्ठम्॥

एत्येधत्यूठ्सु। ६। १। ८९॥

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेका-देशः स्यात्। उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम्। उपेतः। मा भवान् प्रेदिधत्॥

अक्षादूहिन्यामुपसंख्यानम्। अक्षौहिणी सेना॥

उगितश्च ।४।१।६॥

उगिदन्तात् प्रातिपदिकात् ङीप् । भवन्ती पचन्ती ॥

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्-
तयप्ठक्ठञ्कञ्क्वरपः ।४।१।१५॥

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं ततः स्त्रियां ङीप् । कुरुचरी । नदट् । नदी । देवट् । देवी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । प्रास्थिकी । लावणिकी । यादृशी ॥ इत्वरी ।

नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ।
स्त्रैणी । पौंस्नी । शाक्तिकी । आढ्यङ्करणी । तरुणी । तलुनी ॥

यञश्च ।४।१।१६॥

यञन्तात् ङीप् । अकारलोपे कृते ।

हलस्तद्धितस्य ।६।४।१५०॥

हलः परस्य तद्धितयकारस्य लोप ईति परे । गार्गी ॥

प्रादूहोढोढ्येषैष्येषु। प्रौहः। प्रौढ़ः। प्रौढ़िः। प्रेषः। प्रैष्यः।

ऋतेच तृतीयासमासे। सुखेन ऋतः सुखार्त्तः। तृतीयेति किम्। परमर्त्तः।

प्रवत्सतरकम्बलवसनार्णदशानामृणे। प्रार्णम्। वत्सतरार्णम्। इत्यादि।

## उपसर्गाः क्रियायोगे। १। ४। ५९॥

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः॥

प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ्। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप। एते प्रादयः॥

## भूवादयो धातवः। १। ३। १॥

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः।

## उपसर्गादृति धातौ। ६। १। ९१॥

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। प्रार्च्छति।

## एङि पररूपम्। ६। १। ९४॥

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात्।
प्रेजते। उपोषति॥

अचो ऽन्त्यादि टि। १। १। ६४॥

अचाम्मध्ये यो ऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात्॥

शकन्ध्वादिषु पररूपं वाच्यम्। तच्च टेः। शकन्धुः। कर्कन्धुः। मनीषा। लाङ्गलीषा। आकृतिगणो ऽयम्॥ मार्त्तण्डः।

ओमाङोश्च। ६। १। ९५॥

ओमि आङि चात्पररूपमेकादेशः स्यात्। शिवायोन्नमः। शिवेहि॥

अकःसवर्णे दीर्घः। ६। १। १०१॥

अकस्स वर्णेऽचि परे पूर्व्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। होतॄकारः॥

एङः पदान्तादति। ६१। १०९॥

पदान्तादेङो ऽति परे पूर्व्वरूपमेकादेशः स्यात्। हरे ऽव। विष्णो ऽव॥

सर्वत्र विभाषा गोः। ६। १। १२२॥

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते। गो अग्रम्। गोऽग्रम्। एङन्तस्य किम्। चित्ग्वग्रम्। पदान्ते किम्। गोः॥

अनेकाल् शित् सर्वस्य।१।१।५५॥ इति प्राप्ते॥ ङिच्च।१।१।५३॥

ङिदनेकालप्यन्त्यस्यैव स्यात्॥

अवङ् स्फोटायनस्य।६।१।१२३॥

पदान्ते एङन्तस्य गोरवङ् वाचि। गोऽग्रम्। गवाग्रम्। पदान्ते किम्। गवि॥

इन्द्रे च।६।१।१२४॥

गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥

दूराद्धूते च।८।२।८४॥

दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा॥

प्लुतप्रगृह्या अचि नित्यम्।६।१।१२५॥

एते ऽचि प्रकृत्या स्युः। आगच्छ कृष्ण ३ अत्र गौश्चरति।

ईदूदेद्द्विवचनं प्रगृह्यम्।१।१।११॥

ईदूदेदन्तं द्विवचनम् प्रगृह्यं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू॥

अदसो मात्। १। १। १२॥

अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम्। अमुकेऽत्र॥

चादयोऽसत्वे। १। ४। ५७॥

अद्रव्यार्थाश्चादयो निपाताः स्युः॥

प्रादयः। १। ४। ५८॥

एतेऽपि तथा॥

निपात एकाजनाङ्। १। १। १४॥

एकोऽज् निपात आङ्वर्ज्यः प्रगृह्यः। इ इन्द्रः। उ उमेशः। वाक्यस्मरणयोरङित्। आ एवन्नु मन्यसे। आ एवङ्किल तत्। अन्यत्र ङित्। ईषदुष्णम्। ओष्णम्।

ओत्। १। १। १५॥

ओदन्तो निपातः। प्रगृह्यः। अहो ईशाः॥

सम्बुद्धौ शाकल्यस्येतावनार्षे।१।१।१६॥

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ। परे। विष्णो इति। विष्णविति।

मय उञो वो वा। ८। ३। ३३॥

मयः परस्य उञो वो वा अचि। किम्वुक्तम्। किमु चक्तम्

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ ६ ॥ १ ॥ १२७ ॥

पदान्ता इको ह्रस्वो वा स्युरसवर्णेऽचि। ह्रस्वविधि सामर्थ्यान्न स्वरसन्धिः। चक्रि अत्र चक्र्यत्र। पदान्ता इति किम् गौर्य्यौ ॥

अचो रहाभ्यान्द्वे ॥ ८ ॥ ४ ॥ ४६ ॥

अचःपराभ्यां रेफहकाराभ्याम्परस्य यरो द्वे वा स्तः गौर्य्यौ ॥ न समासे। वाप्यश्वः ॥

ऋत्यकः। ६। १। १२८ ॥

ऋति परे पदान्ता अकः प्राग्वत् वा। ब्रह्म ऋषिः। ब्रह्मर्षिः। पदान्ताः किम् आर्च्छत् ॥

इति स्वरसन्धिः ॥

---

हल्सन्धिः ॥

स्तोः श्चुना श्चुः। ८। ४। ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकार-

चवर्गौ स्तः । रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥

शात् । ८ । ४ । ४४ ॥

शात्परस्योक्तन्न । विश्नः । प्रश्नः ॥

ष्टुनाष्टुः । ८ । ४ । ४१ ॥

स्तोः ष्टुना योगेष्टुः । रामः षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥

नपदान्ताट्टोरनाम् । ८ । ४ । ४२ ॥

पदान्ता ट्टवर्गात्परस्याऽनामः स्तोष्टुर्नस्यात् । षट्सन्तः । षट्ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् ॥

अनाम्न वतिनगरीणामितिवाच्यम् । षण्णाम् । षण्णवतिः । षण्णगर्यः ॥

तोः षि । ८ । ४ । ४३ ॥

नष्टुत्वम् । सन्षष्ठः ॥

झलां जशोऽन्ते । ८ । २ । ३९ ॥

पदान्ते झलाञ्जशः स्युः । वागीशः ।

यरोऽनुनासिकेऽनुनासिकोवा । ८।४।४५॥

यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद्मुरारिः ॥

प्रत्यये भाषायान्नित्यम् । तन्मात्रम् । चिन्मयम् ॥

तोर्लि । ८ । ४ । ६० ॥

परसवर्णः । तल्लयः । विद्वांल्लिखति । नस्याऽनुनासिको लः ॥

उदःस्थास्तम्भोः पूर्वस्य । ८ । ४ । ६१ ॥

उदःपरयोः । स्थास्तम्भोः । पूर्वसवर्णः ॥

तस्मादित्युत्तरस्य । १ । १ । ६७ ॥

पञ्चमीनिर्देशेन क्रियमाणङ्कार्य्यं वर्णान्तरेणाऽव्यवहितस्य परस्यज्ञेयम् ।

आदेः परस्य । १ । १ । ५४ ॥

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्यथः ।

झरो झरि सवर्णे । ८ । ४ । ६५ ॥

हलः परस्यझरो वालोपः सवर्णे झरि ॥

खरि च । ८ । ४ । ५५ ॥

खरिझलाञ्चरः स्युः इत्युदोदस्यतः । उत्थानम् । उत्तम्भनम् ॥

झयो हो ऽन्यतरस्याम्। ८। ४। ६२॥

झयः परस्य हस्य वा पूर्व्वसवर्णः। नादस्य घोषस्य सवारस्य महाप्राणस्य तादृशोवर्ग चतुर्थः। वाग्घरिः। वाग्हरि॥

श श्छोऽटि। ८। ४। ६३॥

झयः परस्यशस्यछोवाऽटि। तद्शिव इत्यत दस्य चुत्वे न जकारेकृतेखरि चेति जकारस्य चकारः। तच्छिवः। तच् शिवः॥

छत्वम मीति वाच्यम्। तच्छ्लोकेन॥

मोऽनुस्वारः। ८। ३। २३॥

मान्तस्य पदस्यानुस्वारो हलि। हरिंवन्दे॥

नश्चा पदान्तस्य झलि। ८। ३। २४॥

नस्यमस्य चापदान्तस्य झल्यनुस्वारः। यशांसि आ क्रंस्यते॥

अनुस्वारस्य ययि परसवर्णः।८।४।५८॥

शान्तः।

वापदान्तस्य। ८। ४। ५९॥

त्वङ्करोषि। त्वंकरोषि॥

मो राजि समः क्वौ । ८ । ३ । २५ ॥

क्विबन्ते राजि तौ परे समो मस्य म एव स्यात् । सम्राट ॥

हे मपरे वा । ८ । ३ । २६ ॥

मपरे हकारे परे मस्य मो वा । किम् ह्मलयति । किं ह्मलयति ।

यवलपरे यवला वा । किय्ँह्यः । किं ह्यः । किं वँह्वलयति । किं ह्वलयति किल्ँह्लादयति । किं ह्लादयति ॥

नपरे नः । ८ । ३ । २७ ॥

नपरे हकारे मस्य नो । वा । किन्ह्नुते किं ह्नुते ॥

ङः सि धुट् । ८ । ३ । २९ ॥

डात्परस्य सस्य धुड्वा ।

आद्यन्तौ टकितौ ।१।१।४६ ॥ टित्कितौ

यस्योक्तौ तस्य क्रमादाद्यन्तौ स्तः । षट्सन्तः । षट्त्सन्तः ॥

ङ्णोः कुक्टुक् शरि । ८ । ३ । २८ ॥

वा स्तः । प्राङ्षष्ठः प्राङ्क्षष्ठः । सुगण्षष्ठः । सुगण्ट्षष्ठः ॥

नश्च। ८। ३। ३०॥

नान्तात्परस्य सस्य धुड्वा। सन्त्सः। सन्सः।

शि तुक्। ८। ३। ३१॥

पदान्तस्य नस्य शे परे तुग्वा। सञ्छम्भुः सञ्च्छम्भुः। सञ्च्शम्भुः सञ्शम्भुः।

ङमो ह्रस्वादचि ङमुण्नित्यम्। ८।३।३२।

ह्रस्वात्परो यो ङम् तदन्तं यत्पदन्तस्मात्परस्या चो ङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः सन्नच्युतः।

समः सुटि। ८। ३। ५॥

समोरुः सुटि॥

अत्रानुनासिकः पूर्वस्य तु वा। ८। ३२॥

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा।

अनुनासिकात्परोऽनुस्वारः। ८। ३। ४॥

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः।

खरवसानयोर्विसर्ज्जनीयः। ८।३।१५॥

खरि अवसाने च पदान्तस्य रस्य विसर्गः।

संपुङ्कानां सो वक्तव्यः। संस्कर्त्ता संस्कर्त्ता।

पुमः खय्यम्परे । ८ । ३ । ३४ ॥

अम्परे खयि पुमोरुः । पुंस्कोकिलः पुंस्कोकिलः ।

नश्छव्यप्रशान् ॥ ८ ॥ ३ ॥ ७ ॥

अम्परे छविनान्तस्य पदस्य रुः नतु प्रशान्शब्दस्य ॥

विसर्जनीयस्य सः । ८ । ३ । ७ ॥

खरि । चक्रिंस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति । पदान्तस्येति । किम् । हन्ति ।

नॄन् पे । ८ । ३ । १० ॥

नॄनित्यस्य रुर्वा पे ॥

कुप्वोः ≍क≍पौच । ८ । ३ । ३७ ॥

कवर्गे पवर्गेच विसर्गस्य≍क≍पौस्तः । चाद्विसर्गः । नॄँः पाहि । नॄंःपाहि । नॄं≍पाहि । नॄं≍पाहि नॄंन्पाहि ।

तस्य परमाम्रेडितम् । ८ । १ । २ ॥

द्विरुक्तस्यपरमाम्रेडितंस्यात् ॥

कानाम्रेडिते । ८ । ३ । १२ ॥

कान्नकारस्य रुराम्रेडिते कांस्कान । कांस्कान ॥

छे च । ६ । १ । ७३ ॥

ह्रस्वस्य छे तुक् । शिवच्छाया ।

पदान्ताद्वा । ६ । १ । ७६ ॥

दीर्घात्पदान्ताच्छे तुक्वा लक्ष्मीच्छाया ।

इति हल्सन्धिः ।

---

विसर्गसन्धिः ॥

विसर्ज्जनीयस्य सः । ८ । ३ । ३४ ॥

खरि । विष्णुस्त्राता ।

वा शरि । ८ । ६ । ३६ ॥

शरिविसर्गस्य विसर्गोवा । हरि:शेते हरिश्शेते ।

ससजुषोरुः । ८ । २ । ३६ ॥

पदान्तस्य सस्य सजुषश्च रुःस्यात् ।

अतोरोरप्लुतादप्लुते । ६ । १ । ११३ ॥

अप्लुतादतः परस्य रोरुःस्यादप्लुतेति । शिवो-ऽर्च्यः ।

हशि च । ६ । १ । ११३ ॥

तथा । शिवोवन्द्यः ।

भोभगो अघोअपूर्व्वस्य योऽशि ।८।३।१७॥

एतत्पूर्व्वस्यरोर्य्यादेशोऽशि । देवाइह । देवायिह । भोस् भगोस् अघोस् इति सान्तानिपाताः तेषां रोर्य्यत्वे कृते ॥

हलि सर्व्वेषाम् । ८ । ३ । २२ ॥

भोभगो अघो अपूर्व्वस्य यस्लोपः स्याद्धलि। भो देवाः । भगो नमस्ते । अघोयाहि ॥

रोऽसुपि । ८ । २ । ६९ ॥

अह्नोरेफादेशो नतु सुपि । अहरहः । अहर्गणः ॥

रो रि । ८ । ३ । १४ ॥

रेफस्य रेफे परे लोपः ॥

ढ्रलोपे पूर्व्वस्यदीर्घोऽणः ।६।३।१११ ॥

ढरे फयेर्लोप निमित्तयोः पूर्व्वस्याणोदीर्घः । पुनारमते । हरीरम्य शम्भू राजते । अणः किं । तृढः वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशिचेत्युत्वे रोरी तिलोपे च प्राप्ते ॥

विप्रतिषेधे परं कार्य्यम् ।१।४।२ ॥

तुल्यबलविरोधे परं कार्य्यं स्यात्। इति लोपे प्राप्ते पूर्व्वत्रासिद्धम् इति रोरीत्यस्यासिद्धत्वाद्रुत्वमेव। मनोरथः ॥

एत तदोःसुलोपोऽकोरनञ्समासे हलि ॥ ६ ॥ १ ॥ १३१ ॥

अककारयोरेतत्तदोर्यः सुस्तस्य लोपोहलि न तु नञ् समासे। एषविष्णुः। सशम्भुः। अकोः किम्। एषको रुद्रः। अनञ् समासे किम्। असःशिवः। हलि किम्। एषोऽत्र

सोऽचि लोपे चेत्पादपूरणम् ॥६॥१॥१३४॥

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत्। सेमाम विढ्ढि प्रभृतिम्। सैष दाशरथी-रामः ॥

इति विसर्गसन्धिः।

---

अजन्तपुंलिङ्गाः ॥

अर्थवदधातुरप्रत्ययःप्रातिपदिकम्।१।२।४५॥

धातुं प्रत्ययप्रत्ययान्तञ्च वर्ज्जयित्वा अर्थवच्छब्द-रूपम्प्रातिपदिकसंज्ञं स्यात् ॥

कृत्तद्धितसमासाश्च ।१॥ २ ॥ ४६ ॥

कृत्तद्धितान्तौ समासश्च तथा स्युः ॥

स्वौजसमौट् छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्

ङसिभ्याम्भ्यस्ङसोसाम्ङ्योःसुप्।४॥१॥२॥

सुऔ जस् इतिप्रथमा। अम्औट्शसइति द्वितीया। टाभ्यांभिस् इति तृतीया। ङेभ्याम् भ्यस् इति चतुर्थी। ङसि भ्यां भ्यस् इति पञ्चमी। ङस ओस् आम् इति षष्ठी। ङि ओस् सुप इति सप्तमी॥

ङ्याप् प्रातिपदिकात । ४ ॥ १ ॥ १ ॥

प्रत्ययः ॥ ३ ॥ २ ॥ १ ॥

परश्च । ३ ॥ १ ॥ २ ॥  इत्यधिकृत्य ॥

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परेस्वादयः प्रत्ययाः स्युः ॥

सुपः ॥ १ ॥ ४ ॥ १०३ ॥

सुप स्त्रीणि त्रीणि वचना न्येकश एकवचन द्विवचनबहुवचन संज्ञानि स्युः।

द्व्येकयोर्द्विवचनैकवचने ।१॥४॥२२ ॥

द्वित्वैकत्वयोरेतेस्तः।

बहुषु बहुवचनम् । १ ॥ ४ ॥ २१ ॥

बहुत्वविवक्षा यास्बहुवचनं स्यात् ॥

विरामो ऽवसानम् । १ ॥ ४ ॥ १६०॥

वर्णानाम् भावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ रामः ॥

सरूपाणा मे कशेषएकविभक्तौ ।१।२।६४॥

एकविभक्तौयानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

प्रथमयोः पूर्व्वसवर्णः ॥ ६ ॥ १ ॥ १०२ ॥

अकः प्रथमाद्वितीययोरचि पूर्व्वसवर्णं दीर्घं एकादेशः स्यात् । इति प्राप्ते ।

ना दिचि ॥ ६ ॥ १ ॥ १०४ ॥

आदिचि पूर्व्वं सवर्णंदीर्घः । वृद्धिरेचि रामौ ।

बहुषु बहुवचनम् ॥ १ ॥ ४ ॥ २१ ॥

चुटु ॥ १ ॥ ३ ॥ ७ ॥

प्रत्ययाद्यौ चुटू इतौ स्तः ॥

विभक्तिश्च ॥ १ ॥ ४ ॥ १०४ ॥

सुप्तिङौ विभक्ति संज्ञौ स्तः ॥

न विभक्तौ तुस्माः ॥ १ ॥ ३ ॥ ४ ॥

विभक्तिस्थास्तवर्ग सनानेतः। इति सस्यनेत्वम्। रामाः ॥

एकवचनं सम्बुद्धिः ॥ २ ॥ ३ ॥ ४९ ॥

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञंस्यात्

यस्मा त्प्रत्यय विधिस्तदादि प्रत्यये

ऽङ्गम् । ४ ॥ १३१ ॥

यः प्रत्ययोयस्मात्क्रियते तदादिशब्दस्वरूप न्तस्मि- न्नङ्गं स्यात् ॥

एङ्ह्रस्वात सम्बुद्धेः ॥ ६ ॥ १ ॥ ६९ ॥

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत। हेराम। हेरामौ। हेरामाः ॥

अमि पूर्व्वः ॥ ६ ॥ १ ॥१०७ ॥

अकोऽम्यचि पूर्व्वरूपमेकादेशः। रामम्। रामौ ॥

लशक्व तद्धिते ॥ १ ॥ ३ ॥ ८ ॥

तद्धितवर्ज्जप्रत्ययाद्या लश कवर्गा इत स्युः ॥

तस्मा च्छसो नः पुंसि॥६॥१॥१०३॥

पूर्व्वसवर्णदीर्घात्परोयः शसस्सस्य नःस्यात्पुंसि।

अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२॥

अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासम्भवमिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः। समानपदे इति प्राप्ते ॥

पदान्तस्य । ८ । ४ । ३७ ॥

नस्य णो न । रामान् ॥

टाङसिङसामिनात्स्याः ।७।१।१२॥

अदन्तात्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥

सुपि च । ७ । ३ । १०२ ॥

यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥

अतो भिस ऐस् । ७ । १ । ९ ॥

अनेकाल्शित्सर्वस्य । रामैः

ङेर्यः । ७ । १ । १३ ॥

अतोऽङ्गात्परस्य ङेर्यादेशः ॥

स्थानिवदादेशोऽनल्विधौ ।१।१।५६॥

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् सुपि चेति दीर्घः । रामाय । रामाभ्याम् ॥

बहुवचने झल्येत्। ७। ३। १०३॥

झलादौ बहुवचने सुपि अतोऽङ्गस्यैकारः। रामेभ्यः सुपि किम्। पचध्वम्॥

वाऽवसाने। ८। ४। ५६॥

अवसाने झलां चरो वा। रामात्। रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥

ओसि च। ७। ३। १०४॥

अतोऽङ्गस्यैकारः। रामयोः।

ह्रस्वनद्यापो नुट्। ७। १। ५४॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः॥

नामि। ६। ४। ३॥

अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामयोः। एत्वे कृते॥

आदेशप्रत्यययोः। ८। ३। ५९॥

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्द्धन्यादेशः। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥

वात्या इत्यर्थः। अन्तरे अन्तरा वा शाटकाः। परिधानीया इत्यर्थः॥

पूर्वादिभ्यो नवभ्यो वा।७।१।१६॥

एभ्यो ङसिङ्योः स्मात् स्मिनौ वा स्तः॥ पूर्व्वस्मात्। पूर्वात्। पूर्वस्मिन्। पूर्वे। एवं परादीनाम्। शेषं सर्व्ववत्।

प्रथमचरमतयाऽल्पार्द्धकतिपयनेमाश्च। १।१।३३।

एते जसि उक्तसंज्ञा वा स्युः। प्रथमे। प्रथमाः तयः प्रत्ययः। द्वितये। द्वितयाः। शेषं रामवत्। नेमे। नेमाः। शेषं सर्ववत्।

तीयस्य ङित्सु वा। द्वितीयस्मै। द्वितीयायेत्यादि। एवं तृतीयः। निर्ज्जरः॥

जराया जरसन्यतरस्याम्।७।२।१०१॥

अजादौ विभक्तौ। पदाङ्गाधिकारे तस्य तदन्तस्य च। निर्द्दिश्यमानस्यादेशा भवन्ति। एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस्। निर्ज्जरसौ। निर्ज्जरस इत्यादि। पक्षे हलादौ च रामवत्। विश्वपाः।

## दीर्घाज्जसि च । ६ । १ । १०५ ॥

विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् । विश्वपौ ।

## सुडनपुंसकस्य । १ । १ । ४३ ॥

स्वादिपञ्चवचनानि सर्व्वनामस्थानसंज्ञानि स्युर-क्लीवस्य ।

## स्वादिष्व सर्वनामस्थाने । १ । ४ । १७ ॥

कप्रत्ययावधिषु स्वादिष्वसर्व्वनामस्थानेषु पूर्व्वम्पदं स्यात् ।

## यचि भम् । १ । ४ । १८ ॥

यादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्व-नामस्थानेषु पूर्व्वम्भसंज्ञं स्यात् ॥

## आकडारादेका संज्ञा । १ ॥ ४ ॥ १ ॥

इत ऊर्द्धं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या परा ऽनवकाशा च ॥

## आतो धातोः । ६ । ४ ॥ १४० ॥

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्व-पाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः ।

भिस् । हाहान् । हरिः । हरी ॥

जसि च । ७ ॥ १०९ ॥

ह्रस्वान्तस्याङ्गस्य गुणः । हरयः ।

ह्रस्वस्य गुणः । ७ । ३ । १०८ ॥

सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ।

शेषो घ्यसखि । १ । ४ । ७ ॥

शेष इति स्पष्टार्थम् । ह्रस्वौ याविदुतौ तदन्तं सखिवर्ज्जं घिसंज्ञम् ।

आङो नास्त्रियाम् । ७ ॥ ३ ॥ १२० ॥

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टा संज्ञा । हरिणा । हरिभ्याम् । हरिभिः ॥

घेर्ङिति ॥ ७ ॥ ३ ॥ १११ ॥

घिसंज्ञस्य ङिति सुपि गुणः । हरये ।

ङसिङसोश्च ॥ ६ ॥ १ ॥ ११० ॥

एङो ङसिङसोरतिपूर्वरूपमेकादेशः । हरेः । हर्य्योः । हरीणाम् ।

अच्च घेः ॥ ७ ॥ ३ ॥ ११९ ॥

इदुद्भ्यामुत्तरस्य ङेरौत् घेरत् । हरौ । हरिषु । एवं कव्यादयः ।

अनङ् सौ ॥ ७ ॥ १ ॥ ९३ ॥

सख्युरङ्गस्यानङादेशो ऽसम्बुद्धौ सौ ।

अलो ऽन्त्यात्पूर्व उपधा ॥१॥१॥६५॥

अन्त्यादलः पूर्वो यो वर्णः स उपधासंज्ञः ।

सर्वनामस्थाने चासम्बुद्धौ ॥ ६ ॥ ४ ॥ ८ ॥

नान्तस्योपधाया दीर्घो ऽसम्बुद्धौ सर्वनामस्थाने ।

अपृक्त एकाल् प्रत्ययः । १ । २ । ४१ ॥

हल् ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्
। ६ । १ । ६८ ॥

हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ।

नलोपः प्रातिपदिकान्तस्य ।८।२।७॥

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ।

सख्युरसम्बुद्धौ । ७ । १ । ९२ ॥

सख्युरङ्गात्परं सम्बुद्धिवर्ज्जं सर्व्वनामस्थानं णिद्वत्स्यात् ॥

अचो ञ्णिति । ७ । २ । ११५ ॥

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये।

ख्यत्यात्परस्य। ६। १। ११२॥

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः।

औत् ०॥ ३॥ ११८॥

इतः परस्य ङेरौत्। सख्यौ। शेषं हरिवत्॥

पतिः समास एव। १॥ ४॥ ८॥

घिसंज्ञः। पत्ये। पत्युः २। पत्यौ शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो बहुवचनान्तः।

बहुगणवतुडति संख्या॥ १॥ १॥२३॥

डति च॥ १॥ १॥ २५॥

डत्यन्ता संख्या षट् संज्ञा स्यात्।

षड्भ्यो लुक्। ७। १। २२॥

जश्शसोः॥

प्रत्ययस्य लुक्श्लुलुपः। १। १॥ ६१॥

लुक्श्लुलुप् शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्।

प्रत्ययलोपे प्रत्ययलक्षणम् । १ ॥ १ ।६२॥

प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ।

न लुमताङ्गस्य। १ । १ । ६३॥

लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २। कतिभिः । कतिभ्यः २। कतीनाम् । कतिषु । युष्मदस्मद्षट्संज्ञकास्त्रिषु सरूपाः । त्रि शब्दो नित्यं बहुवचनान्तः । त्रयः। त्रीन् । त्रिभिः । त्रिभ्यः २ ।

त्रेस्त्रयः । ७ । १ । ५३ ॥

आमि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि । प्रियत्रयाणाम् ।

त्यदादीनामः । ७ । २ । १०२ ॥

एषामकारो विभक्तौ । द्विपर्य्यन्तानामेवेष्टिः । द्वौ । द्वौ । द्वाभ्याम्३ । द्वयोः२ । पाति लोकमिति पपीः सूर्य्यः ।

दीर्घाज्जसि च । ६ ॥ १ ॥ १०५ ॥

दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः । पप्यौ । पप्यः। हे पपीः । पपीम् । पपीन् ।

पप्या । पपीभ्याम् । पपीभिः । पप्ये । पपीभ्यः पप्यः । पप्योः २ । दीर्घत्वान्न नुट् । पप्याम् । ङौ तु सवर्णदीर्घः । पपी । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ।

यू स्त्र्याख्यौ नदी । १ । ४ । ३ ॥

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । प्रथमलिङ्गग्रहणञ्च । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ।

अम्बार्थनद्योर्ह्रस्वः । ७ । ३ । १०७ ॥

सम्बुद्धौ । हे बहुश्रेयसि ॥

आण् नद्याः । ७ । ३ । ११२ ॥

नद्यन्तात्परेषां ङितामाडागमः ।

आटश्च । ६ । १ । ९० ॥

आटोऽचि परे वृद्धिरेकादेशः । श्रेयस्यैङव । बहुश्रेयस्याः । बहुश्रेयसीनाम् ।

ङेराम्नद्याम्नीभ्यः । ७ । ३ । ११६ ॥

नद्यन्तादाबन्तान्नीशब्दात् परस्य ङेराम् । बहुश्रेयस्याम् । शेषम्पपीवत् । अङ्यन्तत्वान्न सुलोपः ॥ अतिलक्ष्मीः । शेषम्बहुश्रेयसीवत् प्रधीः ।

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ॥

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रूइत्यस्य चाङ्गस्येयङुवङौ स्तो ऽजादौ प्रत्यये परे। इति प्राप्ते ॥

एरनेकाचो ऽसंयोगपूर्वस्य ।६।४।८२॥

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः। ङौ तु। ग्रामण्याम्। अनेकाचः किम्। नीः नियौ। नियः। अमि शसि च परत्वादियङ्। नियम्। ङेराम्। नियाम्। असंयोगपूर्वस्य किम्। सुश्रियौ। यवक्रियौ ॥

गतिश्च । १ । ४ । ६० ॥

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। गतिकारकेतरपूर्वपदस्य यण् नेष्यते। शुद्धधियौ ॥

न भूसुधियोः ।६। ४। ८५ ॥

एतयोरचि सुपि यण् न। सुधियौ। सुधियः

इत्यादि। सुखमिच्छतीति। सुखीः। सुतीः। सुख्यौ। सुत्यौ। सुख्युः। सुत्युः। शेषं प्रधीवत् शंभुर्हरिवत्। एवं भान्वादयः॥

तृज्वत्क्रोष्टुः। ७। १। ९५॥

असम्बुद्धौ सर्वनामस्थाने। क्रोष्टुशब्दस्य क्रोष्टृ प्रयोक्तव्य इत्यर्थः॥

ऋतो ङिसर्वनामस्थानयोः।७।३।११०॥

ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते॥

ऋदुशनस्पुरुदंशोऽनेहसाञ्च।१।९॥

ऋदन्तानामुशनसादीनाञ्चानङ् स्यादसम्बुद्धौ सौ॥

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। ६। ४। ११॥

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्।

विभाषा तृतीयादिष्वचि।७।१।९७॥

अजादिषु क्रोष्टुर्वा तृज्वत्॥ क्रोष्ट्रा। क्रोष्ट्रे॥

ऋत उत्। ६। १। १११॥

ऋतो ङसिङसोरिति उदेकादेशो रपरः ॥

**रात्सस्य । ८ । २ । २४ ॥**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः । क्रोष्टोः ॥

**नुमचिरतृज्वद्भावेभ्यो नुट्पूर्व्वविप्रतिषेधेन ॥**

क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः । हूह्वौ । हूहूम् । इत्यादि । अतिचमू शब्दे तु नदीकार्य्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचमूनाम् । खलपूः ॥

**ओः सुपि । ६ । ४ । ८३ ॥**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ । खलप्वः । एवं सुल्वादयः । स्वभूः । स्वभुवः । स्वभुवौ । वर्षाभूः ॥

**वर्षाभ्वश्च । ६ । ४ । ८४ ॥**

अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः ॥

इन्कारपुनः पूर्व्वस्य भुवो यण् वक्तव्यः ॥

इन्भ्वौ । एवङ्करभ्वः । धाता । हे धातः । धातारौ । धातारः ॥

ऋवर्णान्नस्य णत्वं वाच्यम् । धातॄणाम् ॥

एवन्नप्त्रादयः । नप्त्रादि ग्रहणं व्युत्पत्ति-पक्षे नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषन्धातृवत् । एवञ्जामात्रादयः । ना । नरौ ॥

नृच । ६ । ४ । ६ ॥

अस्य नामि वा दीर्घः । नृणाम् । नॄणाम् ॥

गोतो णित् । ७ । १ । ६० ॥

ओकारान्ताद्विहितं सर्व्वनामस्थानं णिद्वत् । गौः । गावौ । गावः ॥

औतोऽम्शसोः । ६ । १ । ६३ ॥

ओतोऽम्शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः २ । इत्यादि ॥

रायो हलि । ७ । २ । ८५ ॥

अस्याकारादेशो हलि विभक्तौ । राः ।

रमाया: २। रमयो:। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादय:।

सर्व्वनाम्न: स्याड्ढ्रस्वश्च। ७।३।११४॥

आबन्तात्सर्व्वनाम्नो ङित: स्याडापश्च ह्रस्व:। सर्व्वस्यै। सर्व्वस्या:। सर्व्वासाम्। सर्व्वस्याम्। शेषं रमावत्। एवं विश्वादय आबन्ता:।

विभाषा दिक्समासे बहुव्रीहौ। १। १।२८॥

सर्व्वनामता वा। उत्तरपूर्व्वस्यै। उत्तरपूर्व्वायै। तीयस्येति वा संज्ञा। द्वितीयस्यै। द्वितीयायै। एवन्तृतीया। अम्बार्थेति ह्रस्व:। हे अम्ब। हे अक्क। हे अल्ल। जरा। जरसौ। जरे। इत्यादि पक्षे रमावत्। गोपा विश्वपावत्। मति:। मती:। मत्या:।

ङिति ह्रस्वश्च। १।४।६॥

इयङुवङ्स्थानौ स्त्री शब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तौ ङिति। मत्यै। मतये। मत्या: २। मते: २।

इदुद्भ्याम्। ७। ३। ११७॥

इदुद्भ्यां नदीसंज्ञकाभ्याम्परस्य ङेराम्। मत्याम्। मतौ। शेषं हरिवत्। एवम्बुद्ध्यादयः।

त्रिचतुरोः स्त्रियान्तिसृचतसृ।७।२।९९॥

स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ।

अचि र ऋतः। ७। २। १००॥

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः। स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः २। तिसृभिः तिसृभ्यः २। आमि नुट्॥

न तिसृचतसृ। ६। ४। ४॥

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु। द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्यौ। गौर्यः। हे गौरि। गौर्यावित्यादि। एवं नद्यादयः। लक्ष्मीः। शेषं गौरिवत्। एवन्तरीतन्त्र्यादयः। स्त्री। हे स्त्रि॥

स्त्रियाः। ६। ४। ७९॥

अस्येयङजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः।

वाम्शसोः। ६। ४। ८०॥

स्त्रिया इयङ्। स्त्रियम्। स्त्रीम्। स्त्रियः।

स्त्री: । स्त्रिया । स्त्रियै । स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् । स्त्रीषु । श्रीः । श्रियौ । श्रियः ॥

नेयङुवङ्स्थानावस्त्री । १ । ४ । ४ ॥

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तोनतु स्त्री । हे श्रीः । श्रियै । श्रिये । श्रियाः । श्रियः ॥

वामि । १ । ४ । ५ ॥

इयङुवङ्स्थानौ स्त्र्याख्यौ यूआमि वा नदीसंज्ञौ स्तो नतु स्त्री । श्रीणाम् । श्रियाम् । श्रियि । श्रियाम् । धेनुर्मतिवत् ॥

स्त्रियाञ्च । ७ । १ । ९६ ॥

स्त्रीवाची क्रोष्टुस्तृजन्तवद्रूपं लभते ॥

ऋन्नेभ्यो ङीप् । ४ । १ । ५ ॥

ऋदन्तेभ्योनान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री । गौरीवत् । भ्रूः श्रीवत् । स्वयम्भूः पुम्वत् ॥

न षट्स्वस्रादिभ्यः । ४ । १ । १० ॥

ङीपटापौ न । स्वसा तिस्रा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः । स्वसा स्वसारौ । माता पितृवत् ।

असि मातृः । द्यौर्गोवत् । राः पुम्वत् । नौर्ग्लौ-
वत् ॥ इत्यजन्ताः स्त्रीलिङ्गाः ।

---

## ॥ अजन्त नपुंसकलिङ्गाः ॥

अतोऽम् । ७ । १ । २४ ॥

अतोङ्गात् क्लीवात्स्वमोरम् । ज्ञानम् । एङ्-
ह्रस्वादिति हल्लोपः । हे ज्ञान ॥

नपुंसकाच्च । ७ । १ । १९ ॥

क्लीवादौङः शी भसंज्ञायाम् ॥

यस्येति च । ६ । ४ । १४८ ॥

ईकारे तद्धिते च भस्येवर्णावर्णयोर्लोपः ॥
इत्यल्लोपे प्राप्ते ।

औङः श्याम्प्रतिषेधो वाच्यः ॥

ज्ञाने ॥

जश्शसोः शिः । ७ । १ । २० ॥

क्लीवात् ॥

शि सर्व्वनामस्थानम् । १ । १ । ४२ ॥

नपुंसकस्य झलचः । ७ । १ । ७२ ॥

झलन्तस्याजन्तस्य च क्लीवस्य नुम् स्यात् सर्व्वनामस्थाने॥

मिदचोऽन्त्यात्परः। १। १। ४७॥

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवस्तवोऽसित् स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्। एवन्धनफदयः॥

अद्ड्डतरादिभ्यः पञ्चभ्यः।७।१।२५॥

एभ्यः क्लीवेभ्यः स्वमोरद्डादेशः स्यात्॥

टेः। ६। ४। १४३॥

डिति भस्य टेर्लोपः। कतरत्। कतरद्। कतरे। कतराणि। कतरत्। शेषस्पुंवत्। एवङ्कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमस्य त्वन्यतमम् इत्येव। एकतरात्प्रतिषेधः। एकतरम्॥

ह्रस्वो नपुंसके प्रातिपदिकस्य।१।२।४७॥

अजन्तस्येत्येव। श्रीपम्। ज्ञानवत्॥

स्वमोर्नपुंसकात्।७। १। २३॥

लुक् स्यात्। वारि॥

इकोऽचि विभक्तौ।७। १। ७३॥

इगन्तस्य क्लीबस्य नुमचि विभक्तौ। वारिणी। वारीणि। नलुमतेत्यस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तोगुणः। हे वारि। हे वारे। घेर्ङितीति गुणे प्राप्ते॥

वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन॥

वारिणे। वारिणः। वारिणोः २। वरिणा २। नुमचिरेति नुट। वारीणाम्। वारिणि। हलादौ हरिवत्॥

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। ७। १। ७५॥

टादावचि॥

अल्लोपोऽनः। ६। ४। १३४॥

अङ्गावयवोऽसर्वनामस्थान यजादिपरो योऽन तस्याकारस्य लोपः। दध्ना। दध्ने। दध्नः २। दध्नोः॥

विभाषा ङिश्योः। ६। ४। १३६॥

अङ्गावयवोऽसर्वनामस्थानपरो योऽन तस्याकारस्यलोपो वा स्यात् ङिश्योः परयोः। दध्नि।

शेषस्त्वारिवत्। एवमस्थिदधिसक्थ्यक्षि। सुधि। सुधिनी। सुधीनि। हे सुधे। हे सुधि। सुधिनेत्यादि। मधु। मधुनी। मधूनि। हे मधो। हे मधु। सुलु। सुलुनी। सुलूनि। सुलुनेत्यादि। धातृ। धातृणी। धातॄणि। धातॄणाञ्च। हे धातः। एवं ज्ञात्रादयः॥

एच इग्घ्रस्वादेशे। १। १। ४८।

प्रद्यु। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्रराभ्याम्। प्ररीणाम्। सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि॥

इत्यजन्त नपुंसकलिङ्गाः॥

---

॥ हलन्त पुंलिङ्गाः॥

हो ढः। ८। २। ३१॥

झलि पदान्ते च। लिट्। लिड्। लिहौ। लिहः। लिड्भ्याम्। लिट्सु। लिट्त्सु॥

दादेर्धातोर्घः। ८। २। ३२॥

झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः॥

एकाचो बशो भष् झषन्तस्य स्ध्वोः। ८।२।३७॥

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। धुक्। धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु॥

वा द्रुहमुहष्णुहष्णिहाम्। ८।२।३३॥

एषां हस्य वा घो झलि पदान्ते च। ध्रुक्। ध्रुग्। ध्रुट्। ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्। ध्रुड्भ्याम्। ध्रुक्षु। ध्रुट्सु। ध्रुट्त्सु। एवम्मुह्॥

धात्वादेः षः सः। ६।१।६४॥

स्नुट्। स्नुड्। स्नुक्। स्नुग्। एवं स्निह्॥

इग्यणः संप्रसारणम्। १।१।४५॥

वाह ऊठ्। ६।४।१३२॥

भस्य वाहः संप्रसारणमूठ्॥

संप्रसारणाच्च। ६।१।१०८॥

संप्रसारणादचि पूर्व्वरूपमेकादेशः। वृद्धिः। विश्वौहः। इत्यादि॥

चतुरनडुहोरामुदात्तः । ७ । १ । ९८ ॥

सावनडुहः । ७ । १ । ८२ ॥

नुम् । अनड्वान् ॥

अम् सम्बुद्धौ । ७ । १ । ९९ ॥

हे अनड्वन् । अनड्वाहौ । अनडुहः ॥

वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२ ॥

सान्तस्य वस्वन्तस्य स्रंसादेश्च दस्स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् । विद्वान् । पदान्ते ति किम् ॥ स्रस्तम् । ध्वस्तम् ॥

सहेस्साडः सः । ८ । ३ । ५६ ॥

साड्रूपस्य सहेस्सस्य मूर्द्धन्यादेशः । तुरा-षाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुरा-षाड्भ्यामित्यादि ॥

दिव औत् । ७ । १ । ८४ ॥

दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः । सुदिवौ ॥

दिव उत् । ६ । १ । १३१ ॥

पदान्ते ॥ सुद्युभ्याम् । इत्यादि । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ॥

पट्चतुर्भ्यश्च । ७ । १ । ५५ ॥

एभ्य आमो नुडागमः ॥

रषाभ्यां नो णः समानपदे । ८ । ४ । १ ॥

अचो रहाभ्यां द्वे । ८ । ४ । ४६ ॥

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्णाम् ॥

रोः सुपि । ८ । ३ । १६ ॥

रोरेव विसर्गः सुपि । षत्वम् । षस्य द्वित्वे प्राप्ते ॥

शरोऽचि । ८ । ४ । ४९ ॥

अचि परे शरो न द्वे स्तः । चतुर्षु ॥

सो नो धातोः । ८ । २ । ६४ ॥

पदान्ते । प्रशान् ॥

किमः कः । ७ । २ । १०३ ॥

विभक्तौ । कः । कौ । के । इत्यादि । सर्व्ववत् ॥

इदमो मः । ७ । २ । १०८ ॥

सौ । त्यदाद्यत्वापवादः ॥

इदोऽय पुंसि । ७ । २ । १११ ॥

इदम इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वे ॥

अतो गुणे । ६ । १ । ९७ ॥

अपदान्तादतोगुणेपर रूपमेकादेशः ॥

दश्च । ७ । २ । १०९ ॥

इदमोदस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेस्सम्बोधनन्नास्तीत्युत्सर्गः ॥

अनाप्यकः । ७ । २ । ११२ ॥

अककारस्य इदमइदो ऽनापि विभक्तौ । आबिति प्रत्याहारः । अनेन ॥

हलि लोपः । ७ । २ । ११३ ॥

अककारस्येदमइदोलोप आपि हलादौ । नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे ॥

आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥

एकस्मिन् क्रियमाणं कार्य्यमादाविवान्त इव स्यात् । सुपिचेति दीर्घः । आभ्याम् ॥

नेदमदसोरकोः । ७ । १ । ११ ॥

अककारयोरिदमदसोर्भिस ऐस न । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः२ । एषाम् । अस्मिन् । एषु ॥

द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ॥

इदमेतदोरन्वादेशे । किञ्चित्कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुम्पुनरुपादानमन्वादेशः ।

यथा अनेन व्याकरणमधीतमेनञ्छन्दोऽध्यापयेति ॥

अनयोः पवित्रं कुलम् । एनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः२ । राजा ॥

नङिसम्बुद्ध्योः । ८ । २ । ८ ॥

नस्य लोपो न ङौ सम्बुद्धौ च । हे राजन् ॥

ङावुत्तरपदे प्रतिषेधः ॥

ब्रह्मनिष्ठः । राजानौ । राजानः राज्ञः ॥

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २ ॥

सुब्विधौ स्वरविधौसंज्ञाविधौ कृति तुग्विधौ नलोपो ऽसिद्धोनान्यत्र । राजाश्व इत्यादौ न । इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न । राजभ्याम् । यज्वा । यज्वानौ । यज्वानः ॥

न संयोगाद्वमन्तात् । ६ । ४ । १३७ ॥

वमान्तसंयोगादनो ऽकारस्यलोपो न। यज्वनः। यज्वना। यज्वभ्याम्। ब्रह्मणः। ब्रह्मणा॥

इन्हन्पूषार्य्यम्णां शौ। ६। ४। १२॥

एषां शावेवोपधया दीर्घो नान्यत्र। इति निषेधेप्राप्ते॥

सौ च। ६। ४। १३॥

इन्नादीनामुपधाया दीर्घो ऽसम्बुद्धौ सौ। वृत्रहा। हे वृत्रहन्॥

एकाजुत्तरपदे णः। ८। ४। १२॥

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्व्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम् विभक्तिस्थस्य नस्य णः। वृत्रहणौ॥

हो हन्तेर्ञ्णिन्नेषु। ७। ३। ५४॥

ञिति णिति प्रत्यये नकारेच परे हन्तेर्हकारस्य कुत्वम्। वृत्रघ्नः। इत्यादि। एवं शार्ङ्गिन् यशस्विन् अर्य्यमन् पूषन्॥

मघवा बहुलम्। ६। ४। १२८॥

मघवन् शब्दस्य वात्र इत्यन्तादेशः। ऋदृत्॥

उगिदचां सर्वनामस्थानेऽधातोः। ७।१। ७०॥

अधातोरुगितोनलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने। मघवान्। मघवन्तौ। मघवन्तः। हे मघवन्। मघवद्भ्याम्। तृत्वाभावे। मघवा। सुटि। राजवत्॥

श्वयुवमघोनामतद्धिते। ६। ४। १३३॥

अन्नन्तानाम्भानामेषामतद्धिते संप्रसारणम्। मघोनः। मघवभ्याम्। एवं श्वन्युवन्॥

न संप्रसारणे संप्रसारणम्। ६।१।३७॥

यूनः। यूना। युवभ्याम्। इत्यादि। अर्वा हे अर्वन्॥

अर्वणस्त्रसावनञः। ६। ४। १२७॥

नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशोनतु सौ। अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि॥

पथिमथ्यृभुक्षामात्। ७। १। ८५॥

सौ॥

इतोऽत्सर्वनामस्थाने। ७। १। ८६॥

